Vol. IX No. 2




# BULLETIN OF THE GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY MADRAS

EDITED BY

T. CHANDRASEKHARAN, M.A., L.T.

*Curator, Government Oriental Manuscripts Library, Madras*

PRINTED BY THE SUPERINTENDENT
GOVERNMENT PRESS
MADRAS
1956

# TABLE OF CONTENTS

# HALĀYUDHASTAVA by HALĀYUDHA
## (with the Commentary of Decayāmātya)

Edited by

T. CHANDRASEKHARAN, M.A., L.T.

AND

V. R. KALYANASUNDARAM.

Halāyudhastava which is now printed is in praise of Lord Śiva. This is one of the five famous Śivastotras which are otherwise called *Śivapañcastavī*. This Śivastotra was composed by Halāyudha and is called after his name on the analogy of MāghaKāvya, Vātsyāyana-tantra, etc.

In the Aufrecht's Catalogus Catalogorum, many works have been mentioned under the name Halāyudha. It is to be decided whether all of those Halāyudhas are the same or different ones. For the following reasons it is to be understood that the present author should be prior to 10th century A.D.

1. A copy of this stotra found on the inner side of southern wall in the *maṇṭapa* of the Amareśvara temple at Māndhātā on the left bank of the river Narmadā is dated Saṁvat 1120 which corresponds to A.D. 1063.

2. From the last verse of this stotra, viz.,

द्विजो दक्षिणदेशीयः नवग्रामविनिर्गतः ।
हलायुधबुधः शम्भोरिमां स्तुतिमचीकरत् ॥

it is understood that this Halāyudha is a staunch devotee of Lord Śiva and a native of Navagrāma. One Halāyadha, who was a follower of Śaiva cult and a native of Navagrāma is mentioned in his Dvipada-kāvya, *Basavapurāṇa*, by the Telugu poet Pālkuriki Somanātha who lived in the 12th century A.D. Hence this author might have lived in the 10th or 11th century A.D.

Another Halāyudha is mentioned as the author of many works like *Brāhmaṇasarvsva*, *Mīmāmsāsarvasva*, etc. It is also stated that he adorned the Court of Lakṣmaṇasena of Bengal who ruled over Lakṣaṇa-vati in 12th century A.D. So the author of Halāyudha stotra cannot be identical with this author.

Another Halāyudha is mentioned as the author of *Abhidhānaratnamālā* and *Kavirahasya*. From the following verse, it is clear that the same Halāyudha is the author of both these works.

इति समाप्तमवाप्तगुणोदयं कविरहस्यमिदं रसिकप्रियम् ।
सदभिधाननिदानहलायुधद्विजवरस्य कृतिः सुकृतात्मनः ॥

From the *Abhidhānaratnamālā* it is also understood that Halāyudha was a staunch devotee of Lord Śiva. From this, it may be surmised that the author of these two works is identical with the author of the present stotra, singing the glory of Śiva.

One more Halāyudha is mentioned as the author of a commentary on Piṅgalanāga's *Chandoviciti*. It is not known whether he is identical with the present author or the author of *Mīmāṃsāsarvasva* or different from both of them.

This Halāyudhastotra is accompanied by an erudite commentary of Decayāmātya about whom details can be had from Volume VII, No. 2 of the Bulletin. This edition is based on the following manuscripts :—

1. (अ) Palm leaf. Telugu. D. No.11271.

2. (क) Palm leaf. Telugu. D. No.11274.

3. (ख) Palm leaf. Grantha. D. No. 11273.

4. (ग) Paper. Telugu. D. No. 11272.

5. (घ) Palm leaf. Telugu. R. No. 1041e.

6. (ङ) Palm leaf. Telugu. D. No. 11275. Contains only the first 33 stanzas.

7. (च) Palm leaf. Kannada. D. No. 11276. Contains only 43 stanzas.

8. (छ) Palm leaf. Kannada. D. No. 11277. Contains the stanzas 45 to 56 only.

9. Palm leaf. Telugu. D. No. 11278. This contains Decayāmātya's commentary also. The commentary is based on this single manuscript. In addition to these manuscripts, a printed copy of the text alone was utilised.

॥ श्रीः ॥

# ॥ हलायुधस्तोत्रम् ॥

ऊरेदेचयमन्त्रिकृतव्याख्यासमलङ्कृतम् ।

---

विघ्नान्निघ्नन् द्विरदवदनः प्रीतये [1] वोऽस्तु नित्यं
वामे [2] कूटः प्रकटितबृहद् [3] क्षिणस्थूलदन्तः ।
यः श्रीकण्ठं पितरमुमया श्लिष्टवामार्धदेहं
दृष्ट्वा नूनं स्वयमपि [4] दधावर्धनारीश्वरत्वम् । १ ॥

हलायुधकृतेष्टीकां यूरेदेचयमन्त्रिराट् ।
लक्ष्मीधरकटाक्षेण कुरुते गुरुतेजसा १ ॥

**विघ्नान्निघ्नन्निति ।** विघ्नानन्तरायान् । निघ्नन्संहरन् । द्विरदवदनो विनायकः । प्रीतये सन्तोषाय । वो युष्माकम् ; जगताम् । यद्वा युष्मच्छब्दवाच्यानां देहेन्द्रियादीनाम् । अस्तु भूयात् । नित्यं सर्वदा । वामे वामभागे । कूटो दन्तशून्यः । प्रकटितबृहद्दक्षिणस्थूलदन्तः— प्रकटितश्चासौ बृहन् दीर्घश्च । स चासौ दक्षिणश्च । दक्षिणो दक्षिणभागस्थितः । स चासौ स्थूलो विपुलो दन्तो यस्य सः प्रकटितबृहद्दक्षिणस्थूलदन्तः । यो विनायकः श्रीकण्ठं विषकण्ठं पितरम् । उमया पार्वत्या । श्लिष्टवामार्धदेहं ।श्लिष्टः संश्लिष्टः वामार्धदेहो यस्य तं पितरम् । दृष्ट्वा नूनम्, इवेत्यर्थः । स्वयमपि । दधौ दधार । अर्धनारीश्वरत्वमर्धनारीश्वरभावम् । नारी चासावीश्वरश्च नारीश्वरः । अर्धं नारीश्वरस्यार्धनारीश्वरम् [:] । 'अर्धं नपुंसकमि'ति समासः । अत्र केश्चित्—अर्धं नार्या अर्धनारी । अर्धनारी चासौ ईश्वरश्च इति विगृह्योक्तम् । तन्न । पार्वत्या एवार्धप्रतीतेनेश्वरस्य चेति ।

---

[1] घ. नोऽस्तु ।
[2] ख. कुण्ठः ।
[3] ख. दक्षिणे ।
[4] ग. दधौ त्वर्धनारी ।

अत्रेत्थं पदयोजना—यो द्विरदवदनो वामे कृटः प्रकटितबृहद्दक्षिण-स्थूलदन्तः सन् उमया श्लिष्टवामार्धदेहं पितरं श्रीकण्ठं दृष्ट्वा स्वयमप्यर्धनारीश्वरत्वं दधौ। नूनम्। स द्विरदवदनो वो विघ्नान्निघ्नन् प्रीतयेऽस्तु

अयं भावः—विनायक आराधितः सन् विघ्ननिवृत्तिं वाञ्छितार्थसिद्धिं च कर्तुं शक्नोतीति तस्यैवादौ नमस्कारः कृतः। ईश्वरस्य ज्येष्ठपुत्रत्वाद्विनायकस्य कुमारस्वामिनमस्कारात्पूर्वं तन्नमस्कारः कृतः। पितुः[स्व] स्तुतेः पुत्रस्तुतिरेव अत्यन्तप्रीतिकरीति शिवप्रीत्यर्थमेव पुत्रयोः स्तुतिरादौ प्रक्रान्तेति न विरुद्धम्।

अत्रोत्प्रेक्षालङ्कारः। वामभागदन्तराहित्येन दक्षिणभागदन्तसाहित्येन च हेतुनार्धनारीश्वरत्वोत्प्रेक्षणात्पित्रोरर्धनारीश्वरत्वदर्शनहेतुना स्वस्याप्यर्धनारीश्वरत्वस्वीकारोत्प्रेक्षणात्। अनयोरङ्गाङ्गिभावेन सङ्करः। विघ्नान्निघ्नन्निति शतृप्रत्ययेन श्रेयःप्रतिबन्धकविघ्ननिवृत्तिसमकालमेव श्रेयःप्रापकत्वप्रतीतौ कार्यकारणपौर्वापर्यविपर्ययनिबन्धनातिशयोक्तिः अनयोः संसृष्टिः ॥ १ ॥

श्लाघ्यः पुत्रः स भवति किल स्वस्य वप्तुः सकाशा-
द्धत्ते कैश्चित्कचिदपि गुणैर्यः समुत्कर्षरेखाम्।
इत्थं वाञ्छन्पितुरधिकतां पञ्चवक्त्रस्य नूनं
षष्ठं बिभ्रद्वदनमपरं पातु विश्वं विशाखः ॥ २ ॥

**श्लाघ्य** इति। श्लाघ्यः श्लाघनीयः। पुत्रः कुमारः। स भवति किल। किलेति वार्तायां श्रुतिस्मृतिसीमसु। अयमर्थो वृत्त इत्यर्थः। स्वस्यात्मनः। वप्तुर्बीजावापकर्तुः। पितुरित्यर्थः। 'डुवप् बीजसन्ताने' इत्यस्माद्धातोस्तृजन्तं रूपम्। सकाशात्। धत्ते बिभर्ति। कैश्चित्कचिदपि गुणैः। यः। समुत्कर्षस्यातिशयस्य रेखां प्रकारम्। इत्थमेवम्प्रकारम्। वाञ्छन्नभीप्सन्। पितुर्जनकस्य। अधिकतामाधिक्यम्। पञ्चवक्त्रस्य। पञ्च वक्त्राणि यस्य सः। तस्य। नूनं शङ्के। षष्ठं पञ्चमादधिकम्। बिभ्रद्दधत्। वदनं वक्त्रम्। अपरमन्यत्। पातु रक्षतु। विश्वं प्रपञ्चम्। विशाखः कुमारस्वामी।

अत्रेत्थं पदयोजना—हे ईश लोके यः पुत्रः स्वस्य वप्तुः सकाशात्कचिदपि कैश्चिद्गुणैः समुत्कर्षरेखां धत्ते स पुत्रः श्लाघ्यो भवति किल । इत्थं विशाखः पञ्चवक्त्रस्य पितुस्तवाधिकतां वाञ्छन्नपरं षष्ठं वदनं बिभ्रद्विश्वं पातु ।

अत्रातिशयोक्तिरलङ्कारः कुमारस्य पितुरधिकतावाञ्छानिबन्धनषष्ठवदनस्वीकारासम्बन्धेऽपि सम्बन्धोक्त्यासम्बन्धे संबन्धनिबन्धनातिशयोक्तिः । कविकल्पितवस्तुवृत्तसौन्दर्ययोरभेदाध्यवसायः ॥ २ ॥

पुत्रद्वयं प्रस्तुत्य पितरं प्रस्तौति कविः—**एको देव** इति ।

एको देवः स जयति शिवः [1]केवलज्ञानमूर्ति-
देवी सा च त्रिभुवनमिदं यद्विभूतिप्रपञ्चः ।
यत्कूटस्थं मिथुनमविनाभावसम्बन्धयोगा-
न्मिश्रीभूतं तदखिलजगज्जन्मबीजं नमामि ॥ ३ ॥

एकोऽद्वितीयः । 'एक एव रुद्रो न द्वितीयाय तस्थे' इति श्रुतेः । देवो देवनशीलः । प्रपञ्चेन क्रीडति । शत्रून् विजिगीषते । सकलव्यवहारहेतुः । द्योतमानः, स्तूयमानः, माद्यन् । स्वप्नके अविद्याया विषयः आश्रयश्च । कान्तोऽवगतिस्वरूपः । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति श्रुतेः । प्रतीकोपादानमेको देव इति पदद्वयेनेत्यवगन्तव्यम् । स प्रसिद्धः । प्रसिद्धवाचकत्वात्तच्छब्दो यच्छब्दोपादानं नापेक्षते । जयति सर्वोत्कर्षेण वर्तते । अकर्मको जयतिधातुः सर्वोत्कर्षवाचक इति रक्षितेनोक्तम् । 'शिवः' । शिव् स्वप्ने' इत्यस्माद्धातोः शिवशब्दो निष्पन्नः । वशीकृताविद्य इत्यर्थः । यद्वा 'वश कान्तौ' इत्यस्माद्धातोः शिवशब्दो निष्पन्नः । तथा चोक्तम्—'हिंस् धातोः सिंहशब्दो वशधातोः शिवः स्मृतः । वर्णव्यत्ययतः सिद्धः पश्यकः कश्यपो यथा' इति । केवलज्ञानमूर्तिः । केवलं च तज्ज्ञानं च केवलज्ञानं ज्ञेयासम्बद्धमित्यर्थः । तदेव मूर्तिः स्वरूपं यस्य सः । देवी क्रीडनशीला । सा पार्वतीशब्दवाच्या ।

---

[1] क. ख. केवलं ।

चकार उभयसमुच्चयार्थः । उभयोपादानकत्वं प्रपञ्चस्येति सिद्धान्त इति सूचितः । तदेव स्फोरयति—त्रिभुवनमित्यादि । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । पात्रादित्वान्न ङीप् । इदं इदंशब्दवाच्यम् । अहंप्रत्ययबोध्यव्यतिरिक्तम् । यद्विभूतिप्रपञ्चः ययोः शिवशक्त्योः विभूते-रैश्वर्यस्य प्रपञ्चो विलासः । अत्रायं यच्छब्द उत्तरवाक्यस्थत्वात्तच्छब्दो-पादानं नापेक्षते । यथाह-मम्मटः—सप्तमोल्लासे उत्तरवाक्यस्थो यच्छ-ब्दस्तच्छब्दोपादानं नापेक्षते इति । उदाजहार च—

'साधु चन्द्रमसि पुष्करैः कृतं
मीलितं यदभिरामताधिके ।
उद्यता रजनि कामिनीमुखे
तेन साहसमनुष्ठितं ननु' ॥ इति ॥

ऐश्वर्यं प्रपञ्चरूपेण विवर्त इति यावत् । शिवशक्त्योः सकाशात् प्रपञ्चोत्पत्तिप्रकारं तावदाह—यत्कूटस्थम् । कूटे कूटाख्यकर्मणि तिष्ठ-तीति कूटस्थं । कूटकर्मावलम्बीत्यर्थः । मिथुनं शिवशक्तिसङ्घटित-मर्धनारीश्वरात्मकं षड्विंशं तत्त्वमिति यावत् । अविनाभावसम्बन्ध-योगान्नित्यसम्बन्धयोगादित्यर्थः । उमामहेश्वरयोः शब्दार्थात्मकत्वात् शब्दार्थयोः सम्बन्धो नित्यः । आह च भगवान् जैमिनिः—'औत्पत्तिकस्तु शब्द-स्यार्थेन सम्बन्धः' । इति । मिश्रीभूतं मिश्रितं । तत् । अखिल-जगज्जन्मबीजम् । अखिलस्य जगतो जायमानस्य प्रारब्धकर्मावलम्बिनो जन्म उत्पत्तिस्तस्य बीजं बीजकर्मावलम्बि नमामि नमस्करोमि ।

अत्रेत्थं पदयोजना—एको देवः केवलज्ञानमूर्तिः स शिवो जयति । सा च देवी जयति । इदं त्रिभुवनं यद्विभूतिप्रपञ्चः यद्वस्तु कूटस्थम-विनाभावसम्बन्धयोगान्मिश्रीभूतं मिथुनं अखिल जगज्जन्मबीजं तद्वस्तु नमामि।

अयमर्थः—कर्माणि त्रिविधानि कूटबीजप्रारब्धात्मकानि । कूटकर्माणि कार्योत्पत्त्यनुन्मुखानि सत्तामात्रेणावस्थितानि । कुसूलस्थव्रीहिवत् । बीजकर्माणि कार्योत्पत्त्युन्मुखानि । केदारोप्तव्रीहिवत् । प्रारब्धकर्माणि उत्पन्नकार्यात्मकदेहादीनि । उत्पन्नव्रीह्यङ्कुरवत् इत्यलमतिविस्तरेण ॥ १ ॥

एकः स्रष्टा सकलजगतामादिभूतः स्वयम्भू-
स्त्राता तेषां त्रिभुवनगुरुर्वासुदेवः प्रसिद्धः ।
यस्तौ द्वावप्यतुलमहिमा संहरत्यन्तकाले
कस्तस्यान्यो भवति सदृशः श्रीमहाकालमूर्तेः ॥ ४ ॥

एक इति । एकः । स्रष्टा सृष्टिहेतुः । सकलजगतां समस्तभुवनानामादिभूतः पुरातनः स्वयम्भूर्ब्रह्मा । त्राता रक्षकः । तेषां सकलजगताम् । त्रिभुवनगुरुः त्रिभुवनस्य गुरुः वर्णाश्रमधर्मानुष्ठापकः । वासुदेवः । वसुनि तोये दीव्यति क्रीडतीति वसुदेवः । वसुदेव एव वासुदेवः । स्वार्थेऽण्प्रत्ययः । प्रसिद्ध आगमेष्विति । 'देवोऽन्तःसमुद्रे मनसा चरन्तम्' इत्यादिषु, 'अम्भस्य पारे भुवनस्य मध्ये' इत्यादिषु च । यो देवस्तौ पूर्वोक्तौ ब्रह्मवासुदेवौ । द्वितीयान्तं पदम् । अतुलमहिमा । अतुलोऽसदृशो महिमा यस्य सः । सर्वोपमर्दनक्षम इति यावत् । संहरति विनाशयति । अन्तकाले महाकल्पान्तकाले । कस्तस्यान्य इतरः । भवति विद्यते । सदृशस्तुल्यः । श्रीमहाकालमूर्तेः । श्रीर्विषं तया महाकाला महानीला सा चासौ मूर्तिर्गलो यस्य सः । तस्य नीलग्रीवस्येत्यर्थः । यद्वा महाननवच्छिन्नः काल एव मूर्तिः स्वरूपं यस्य स तस्य । ब्रह्मवासुदेवौ तु कालेन परिच्छिन्नौ । अतश्च तयोरुपमर्दको हर इति सिद्धम् ।

अत्रेत्थं पदयोजना—सकलजगतामादिभूतः स्वयम्भूरेकः स्रष्टा । त्रिभुवनगुरुर्वासुदेवः प्रसिद्धस्तेषामेकस्त्राता । अन्तकाले तौ द्वावप्यतुलमहिमा एकः संहरति । तस्य महाकालमूर्तेः कोऽन्यः सदृशो भवति न कोऽपीत्यर्थः ॥ ४ ॥

वक्तुं वाञ्छा हर निरवधि त्वन्महिम्नः स्वरूपं
चेतश्चैतत्कतिपयपदज्ञानमात्रावसन्नम् ।
[1]ज्ञात्वैवेदं त्रिनयन मया त्वद्गुणस्तोत्रभक्त्या
स्वात्मन्येव स्वयमधिकृतो धृष्टतापट्टबन्धः ॥ ५ ॥

1. क. ज्ञात्वा देवं; घ. ङ. ज्ञात्वा चेदं ।

वक्तुमिति । वक्तुं स्तोतुम् । वाञ्छा इच्छा । वाञ्छामात्रमेव विद्यत इत्यर्थः । हे हर पापनाशक । निरवधि । अवधेर्मर्यादाया निर्गतं निरवधि । त्वन्महिम्नस्तवैश्वर्यस्य स्वरूपं याथात्म्यम् । चेतः बुद्धितत्त्वं चैतत् । कतिपयपदज्ञानमात्रावसन्नम् । पद्यन्त इति पदाः पदार्थाः, कतिपये च ते पदाश्च कतिपयपदास्तेषां ज्ञानं तन्मात्रावसन्नं तन्मात्रैकगोचरमित्यर्थः । यद्वा 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति अभिधानात्पदशब्दो वस्तुवचनः । कतिपयानि च तानि पदानि चेति विग्रहः । शेषं समानम् । ज्ञात्वैव विदित्वैव । इदं अशक्यार्थः विषयत्वामित्यर्थः । हे त्रिनयन । त्रीणि नयनानि यस्य सः त्रिनयनः तस्य सम्बुद्धिः हे त्रिनयन । मया हलायुधेन प्रयोज्यकर्त्रा । त्वद्गुणस्तोत्रभक्त्या । भवद्गुणानां स्तोत्रं स्तुतिकरणं तत्र भक्तिः । तया । प्रयोजककर्त्र्या । स्वात्मनि स्वस्या भक्तिः[भक्तेः] आत्मनि स्वरूप एव स्वयं भक्तिः ? । अधिकृतः ऐश्वर्यवानधिकारितः । अन्तर्भावितणिच् । धृष्टतापट्टबन्धः धाष्ट्र्यसाम्राज्यम् । अयमर्थः—मया भक्त्या कर्त्र्या स्वात्मनि धृष्टतापट्टबन्धः कृतः भक्तिरेव धृष्टा सती अतिभीरुं मां स्तोत्रे प्रवर्तयतीति । यद्वा मया कर्तृभूतेन भक्त्या करणभूतया स्वात्मनि मयि स्वयं धृष्टतापट्टबन्धः कृतः । भक्तिवशादहमेव धृष्टो भूत्वा स्तोतुमुद्युञ्जान इति भावः । यद्वा मया करणभूतेन भक्त्या करणभूतया धृष्टतापट्टबन्धो नाम पदार्थविशेषः स्वयं स्वयमेव स्वात्मनि अधिकृत इति । अयं भावः—धृष्टतापट्टबन्धः स्वयमेवागत्य स्वयमेव भवन्तं स्तौतीति ।

अत्रेत्थं पदयोजना—हे हर त्वन्महिम्नो निरवधि स्वरूपं वक्तुं वाञ्छामात्रम् । एतच्चेतश्च कतिपयपदज्ञानमात्रावसन्नं भवति । हे त्रिनयन ! इदं ज्ञात्वैव मया त्वद्गुणस्तोत्रभक्त्या धृष्टतापट्टबन्धः स्वात्मन्येव स्वयमधिकृतः ।

अत्रातिशयोक्तिरलङ्कारः । भक्तेः स्वयमधिकारस्वीकारासम्बन्धेऽपि सम्बन्धोक्त्या असम्बन्धे सम्बन्धनिबन्धना अतिशयोक्तिः । यद्वा—स्वस्मिन् हलायुधे भक्त्या धृष्टतापट्टबन्धसमर्पणासम्बन्धेऽपि सम्बन्धोक्त्या

असम्बन्धे सम्बन्धनिबन्धना अतिशयोक्तिः । यद्वा – घृष्टतापट्टबन्धस्य स्वस्मिन्नाधिकारस्वीकारासम्बन्धेऽपि सम्बन्धोक्त्या असम्बन्धे सम्बन्धनिबन्धना अतिशयोक्तिः ।

स्वात्मनि स्वयमेवाधिकरोतीति अभेदे भेदोक्त्या अभेदे भेदनिबन्धना अतिशयोक्तिः । एवं सर्वत्र कविकल्पितवस्तुसौन्दर्यवस्तुवृत्तसौन्दर्ययोर-भेदाध्यवसाय इति अवगन्तव्यम् । एतच्च महिम्नःस्तोत्रे 'कृशपरिणति चेतः' इति (३२) श्लोके निपुणतरमुपपादितम् । तत्तत एवावधार्यम् । एवमतिशयोक्त्यलङ्कारचतुष्टयस्य एकस्मिन्वाचकेऽनुप्रवेशादेकवाचकानुप्रवेशेन सङ्कर इति ध्येयम् ॥ ५ ॥

उक्तमेवार्थं सोपस्कारमाह—**वागीश** इति ।

[1]वागीशस्त्वं युगपदखिलज्ञानसम्पत्तियुक्तः
का ते तुष्टिः स्तुतिरचनया मादृशस्याल्पबुद्धेः ।
एवं ज्ञात्वा हर विरमति स्तोत्रहेतौ हठान्मे
भक्त्यावेशात्प्रसरति मुखाद्भारती किं करोमि ॥ ६ ॥

वागीशः वाचामीशः वागीशः । त्वं भवान् । युगपदखिल-ज्ञानसम्पत्तियुक्तः । युगपदेककालं अखिलस्य भूतभविष्यद्वर्तमानकालविषयस्य ज्ञानस्य सम्पत्तिः प्रसारस्तया युक्तः सर्वज्ञ इत्यर्थः । का ते तुष्टिः सन्तोषः । स्तुतिरचनया स्तोत्रकरणेन । मादृशस्य मद्विधस्याल्प-बुद्धेर्मन्दमतेः । एवं ज्ञात्वा विज्ञाय । हे हर ! विरमति सति । मयीति शेषः । स्तोत्रहेतौ स्तोत्रनिमित्ते । स्तोत्ररचनायामित्यर्थः । हठादकस्मान्मे मम । भक्त्यावेशात् भक्तेरावेश उद्रेकस्तस्मात् । यथा भूतावेशान्मनुष्य आत्मानमजानान एव वदति वचनानीति लोक-प्रसिद्धिः, तथा भक्त्यावेशवशादहमप्यात्मानमजानान एव । इदं तु स्तुतिवचनं भक्तिकृतमित्यवगन्तव्यम् । प्रसरति निःसरति । वक्त्राद्भारती वाणी । किं करोमि किं करवाणि ।

---

[1] ख. वागीश त्वं ।

अत्रेत्थं पदयोजना—त्वं वागीशः त्वं युगपदखिलज्ञानसम्पत्तियुक्तः। मादृशस्याल्पबुद्धेः स्तुतिरचनया ते का तुष्टिः। एवं ज्ञात्वा स्तोत्रहेतौ मयि विरमति सति हठाद्भक्त्यावेशान्मे मुखाद्भारती प्रसरति किं करोमि।

अत्र काव्यलिङ्गमलङ्कारः। स्तोत्रे विरते सति स्तोत्रकर(णे)-[णस्य]भूतावेशन्यायेन समर्थनाद्वाक्यार्थहेतुकं काव्यालङ्गम्। भक्तेरचेतनायाः स्तोत्रकरणासम्बन्धेऽपि सम्बन्धोक्त्या असम्बन्धे सम्बन्धनिबन्धना अतिशयोक्तिः। अनयोरङ्गाङ्गिभावेन सङ्करः। भक्तिरेव भवन्तं स्तौति [नाहं भवन्तं स्तोतुं] शक्नोमीति गर्वपरिहारवस्तुप्रतीतेः कविप्रौढोक्तिसिद्धार्थशक्तिमूलालङ्कारेण वस्तुध्वनिरित्यवगन्तव्यम्॥ ६॥

यत्ते तत्त्वं [1]निरुपधि पदं वाङ्मनःपारभूतं
ब्रह्मादीनामपि हर गिरस्तत्र भग्नाः प्रवेष्टुम्।
अर्वाचीनं [2]यदपरमिदं पार्वतीवल्लभं ते
रूपं भक्त्या वरद तदहं वाग्भिरभ्यर्चयामि॥ ७॥

इति। यत्ते तव। तत्त्वं यथार्थम्। निरुपधि निरुपाधिकम्। पदं स्वरूपम्। वाङ्मनःपारभूतम्। वाक् च मनश्च वाङ्मनसी तयोः पारभूतं पारं प्राप्तम्। भूतशब्दः प्राप्तिवचनः। 'भू प्राप्तौ' इति (सौत्र) [चौरादिक]धातोर्निष्ठान्तं रूपम्। 'इत्थम्भूतलक्षणे' इत्यत्र भूतशब्दः प्राप्तिवचनः। 'किंचित्प्रकारं प्राप्त इत्थम्भूत' इति वृत्तिकारव्याख्यानात्। अत्र समासान्तविधेरनित्यत्वाद्वाङ्मनःपारभूतमिति रूपसिद्धिः। ब्रह्मादीनामपि हे हर! गिरः। तत्र निरुपाधिकस्वरूपे। भग्नाः कुण्ठिताः। प्रवेष्टुं गोचरयितुम्। अर्वाचीनं सगुणस्वरूपं यदपरं निरुपाधिकादन्यत्। इदं भक्तिसेव्यम् पार्वतीवल्लभं उमा[प्रीतिकरं] ते तव। रूपं स्वरूपम्। भक्त्या। हे वरद। तत्। अहं तद्रूपं वाग्भिर्वचोभिरभ्यर्चयामि स्तौमीत्यर्थः।

---

[1] च. निरवधि परं।  [2] घ. यदपरिमितं।

अत्रेत्थं पदयोजना--हे हर ! निरुपाधि वाङ्मनःपारभूतं ते तत्त्वं यदस्ति तत्र पदे ब्रह्मादीनामपि गिरः प्रवेष्टुं मग्नाः । किं तु तेऽर्वाचीनं पार्वतीवल्लभं रूपं यदस्ति । हे वरद ! अहं भक्त्या तद्रूपं वाग्भिरभ्यर्चयामि ।

अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् ॥ ७ ॥

स्वाहङ्कारं परिहरति—अन्यैरिति ।

अन्यैः स्तोत्रं रचितममृतस्यन्दिभिर्वाग्विलासैः
फल्गुप्रायैः किमिदमियता त्यज्यते मद्वचोभिः ।
किं वा कैश्चित्कनककमलैरर्चितं पादपीठं
भक्त्या [1]शम्भो न पुनरपरः पूजयत्यर्कपुष्पैः ॥ ८ ॥

अन्यैर्भट्टाचार्यमल्हणदन्तिप्रभृतिभिः स्तोत्रं स्तुतिः । रचितम् । अमृतस्यन्दिभिरमृतार्द्रैः । वाग्विलासैः वचोविलासैः । फल्गुप्रायैरसारभूतैः । किम् । किंशब्द आक्षेपे । इदं मत्कृतं स्तोत्रम् । इयता एतावन्मात्रेण । त्यज्यते निरस्क्रियते । मद्वचोभिः । किं वा । किमित्याक्षेपे । कैश्चिद्विष्णुप्रभृतिभिः कनककमलैः स्वर्णाम्बुजैः । अर्चितं पूजितम् पादपीठम् । भक्त्या भक्त्यावेशेन । हे शम्भो । न पुनः । नेत्यत्र काकुः । पुनरिति वाक्यालङ्कारे । अपरोऽन्यो दरिद्रः । पूजयत्यर्कपुष्पैः ।

अत्रेत्थं पदयोजना--अमृतस्यन्दिभिर्वाग्विलासैरन्यैः स्तोत्रं विरचितं; फल्गुप्रायैर्मद्वचोभिरिदं स्तोत्रमियता त्यज्येत किम् । हे शम्भो । तव पादपीठं कनककमलैः कैश्चिदर्चितम् । अपरोऽर्कपुष्पैः पूजयति वा न किम् ।

अयमर्थः—ईश्वरपूजायां द्रव्यतारतम्यं नास्ति । परन्तु भक्तितारतम्यमेव निबन्धनं फलं ददातीति । अत्र काकाक्षिप्तं गुणीभूतव्यङ्ग्यम् ॥ ८ ॥

---

[1] ग. शम्भोः पुनरपि परः ।

[1]पथ्याहारौ हर जलमुचां यौ च यौ पङ्कजानां
मित्रामित्रौ वरद हविषां दाहकग्राहकौ यौ ।
यौ गन्धस्य प्रजनवहनौ तानहं दृष्टिहेतो-
रष्टौ वन्दे त्रिभुवन[2]तनोर्मूर्तिभेदांस्तवैतान् ॥ ६ ॥

**पथ्याहारा**विति । पथ्याहारौ पन्थाश्चाहारश्च पथ्याहारौ । हर ! जलमुचां मेघानाम् । अनेनाकाशो जलं चोक्तम् । तथाहि—अमरशेषे—'मेघाध्वा च महाबिलम्' इत्यभिधानात् मेघानां पन्था आकाशः । मेघानां जलधरत्वात् । उदकस्य घनरसशब्दवाच्यत्वात् । घनैर्मेघैरस्यत इति घनरसः । अतश्च मेघानामाहारो जलमित्यत उक्तं पथ्याहाराविति । यौ च यौ पङ्कजानां कमलानां मित्रामित्रौ । मित्रं सुहृत् । अमित्रः शत्रुः । अनेन सूर्यचन्द्रावुच्येते । पङ्कजानां मित्रं सूर्योऽमित्रश्चन्द्रः । अत उक्तं मित्रामित्राविति । हे वरद ! हविषां पुरोडाशादीनां दाहकग्राहकौ । अनेनाग्नियजमानावुक्तौ । पुरोडाशादेर्दाहकोऽग्निः । यजमानस्तु इन्द्रादिभ्यः पुरोडाशादेर्हविषः प्रदातृत्वाद्ग्राहक इत्युच्यते । अत उक्तं दाहकग्राहकाविति । यौ गन्धस्य गन्धगुणस्य प्रजनवहनौ । प्रजन उत्पादकः । वहनो वाहकः । अनेन पृथिवीवायू निर्दिष्टौ । गन्धः पृथिवीगुणः । स च द्व्यणुकादुत्पन्नः । 'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठति' इत्यङ्गीकाराद्द्रव्योत्पत्यनन्तरं गुणोत्पत्तिरुक्ता वैशेषिकैः । वायुश्च गन्धवहः । अत उक्तम्—प्रजनवहनाविति । तानहं दृष्टिहेतोरष्टौ वन्दे नमस्करोमि । त्रिभुवनतनोः त्रिभुवनमेव तनुर्यस्य सः त्रिभुवनतनुः तस्य । मूर्तिभेदान् स्वरूपविशेषान् तव भवतः । एतान् ।

अत्रेत्थं पदयोजना—हे हर ! जलमुचां यौ पथ्याहारौ । यौ च पङ्कजानां मित्रामित्रौ, हे वरद यौ हविषां दाहकग्राहकौ । यौ च गन्धस्य प्रजनवहनौ । तानेतान् । दृष्टिहेतोः परिदृश्यमानस्येत्यर्थः । त्रिभुवनगुरोस्तवाष्टौ मूर्तिभेदान् वन्दे ।

---

[1] घ. पन्था ।
[2] अ. क. ख. ग. घ. ङ. च.—तनो ।

अयमर्थः—सगुणस्य परमेश्वरस्य पृथिव्यप्तेजोवाय्वाकाशसूर्यचन्द्र- सोमयाजिस्वरूपा अष्टौ तनवो दृष्टिहेतुत्वेन प्रत्यक्षाः । एवं प्रत्यक्षायमाणः परमेश्वरो युक्तिभिर्नापलपितुं शक्य इति भावः ॥ ९ ॥

संसारेऽस्मिन् ध्रुवमसुलभं मानुषं जन्म लब्ध्वा
युष्मानेको भजति सुकृती कश्चिदन्यं च देवम् ।
आरूढोऽपि स्मरहर ! गिरिं रोहणं [1] भाग्ययोगा-
देको रत्नं कलयति महत्काचमन्यश्च फल्गु ॥ १० ॥

**संसारेऽस्मिन्निति** । संसारे प्रपंचे । अस्मिन् परिदृश्यमाने । ध्रुवं सत्यम् । असुलभं सुखेन लब्धुमशक्यम् । मानुषं मनुष्यसम्बन्धि जन्म उत्पत्तिम् । लब्ध्वा प्राप्य । युष्मान् त्वाम् । पूजायां बहुवचनम् । एको भजति निषेवते । सुकृती पुण्यवान् । कश्चित् असुकृतीत्यर्थः । अन्यं च भवद्व्यतिरिक्तदेवं देवताबुद्धिपरिकल्पितम् । आरूढोऽपि आरुह्य स्थितोऽपि । अपिशब्दः सम्भावनायाम् । हे स्मरहर । गिरिं पर्वतं रोहणं रोहणाख्यम् । भाग्ययोगाददृष्टवशात् । एकः सुकृती । रत्नं माणिक्यम् । कलयति प्राप्नोति । महदनर्घ्यम् । काचं मृद्विकारमणिम् । अन्य इतरः । असुकृतीत्यर्थः । फल्गु असारम् ।

अत्रेत्थं पदयोजना—हे स्मरहर ! ध्रुवमस्मिन्संसारे असुलभं मानुषं जन्म लब्ध्वा एकः सुकृती युष्मान् भजते । कश्चिच्च अन्यं देवम् । भजते । भाग्ययोगात् रोहणं गिरिमारूढोऽपि एको महद्रत्नं कलयति अन्यश्च काचं फल्गु रत्नं कलयति ।

अत्र दृष्टान्तालङ्कारः । मानुषजन्मलाभरोहणाचलप्राप्त्योरनर्घ्यरत्नकाचप्राप्त्योश्च भवत्पादभजनान्यदेवभजनयोश्च बिम्बप्रतिबिम्बभावेनावस्थानात् । न चेयं निदर्शना । समानकर्तृकक्रियान्वयाभावात् । यथा—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥

---

[1] ग. भव्ययोग्याद् ।

इत्यत्र म[दीयाल्पविषयमत्या सूर्य]वंशवर्णनमुडुपेन सागरतरणमिवेति सादृश्याक्षेपः अस्मीति पदार्थान्वयवशायातसमानकर्तृकान्वयनिबन्धनः । इह तु भिन्नकर्तृकक्रियान्वयनिबन्धनः । अत एव न प्रतिवस्तूपमा । वस्तुप्रतिवस्तुनिबन्धनत्वात्तस्याः । नाप्यर्थान्तरन्यासालङ्कारः । सामान्येन विशेषसमर्थनं वा विशेषेण सामान्यसमर्थनं वा कार्येण कारणसमर्थनं वा कारणेन कार्यसमर्थनं वाऽत्र अत्यन्तासम्भावितम् । रोहणगिरिमारूढस्य कस्यचिन्मणिप्राप्तिः कस्यचित्काचप्राप्तिरिति निर्धारयितुमशक्यमिति सन्दिग्धत्वेन लोकप्रसिद्धभावेन हेतुत्वायोगादित्यलमतिविस्तरेण ॥ १० ॥

पूर्वोक्तमेव सोपस्कारमाह—**ये त्वामिति** ।

ये त्वामर्हन् सुगत इति वा [1]भक्तियोगाद्भजन्ते
तेभ्यः शम्भो फलमभिमतं त्वं ददासीति युक्तम् ।
अध्वक्लान्तैः स्वरुचिरचितं नाम किंचिद्गृहीत्वा
शीतं पीतं जलमिह जनैः किं न तृप्तिं करोति
॥ ११ ॥

ये अवैदिकाः । त्वां भवन्तम् । अर्हन्नामा कश्चन देवः । सुगतनामा कश्चन देवः । इतिशब्देन कर्मणोऽभिहितत्वादर्हन्नित्यत्र सुगत इत्यत्र च न द्वितीयाविभक्तिः । यथाह वामनः—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः । परिगणनस्य प्रायिकत्वात्' । इति । 'कृत्तद्धितसमासैः' इति परिगणनस्य प्रायिकाभिप्रायत्वादित्यर्थः । तथा च माघे प्रयोगः—'अमुं नारद इत्यबोधि सः' । इति ॥ भक्तियोगाद्भक्त्युद्रेकात् । भजन्ते सेवन्ते । तेभ्यः अर्हतसौगतादिभ्यः । हे शम्भो! फलं स्वर्गादिकं । अभिमतं वाञ्छितम् । त्वं भवान् ददासीति युक्तम् । तदेव समर्थयति—अध्वक्लान्तैः । अध्वना मार्गगमनेन क्लान्तैः खिन्नैः । स्वरुचिरचितम् । स्वेषां रुचिवशाद्रचितं निर्मितं स्वकपोल[कल्पितमि]ति यावत् । नाम नामधेयं किंचित् । गृहीत्वा आदाय । शीतं शीतलम् । पीतं जलमुदकम् । इह लोके । जनैर्मनुष्यैः । किं न तृप्तिं करोति । नेत्यत्र काकुः ।

---

[1] च. बुद्धिभेदात् ।

अयमर्थः—लोके अध्वक्लान्ताः पथिकाः अतीव पिपासवः प्रवासं प्राप्य घटजलं घटीजलं कुम्भजलं इत्यादि नाम गृहीत्वा तज्जलमानीय पीत्वा पिपासाशान्तिं कुर्वन्ति। अत्र घटादेर्भेद एव। पिपासाशमनरूपफलदायकं जलमेकमेवेत्यभिसन्धिः। अत्र श्रुतिः—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति?।

अत्रेत्थं पदयोजना—हे शम्भो! त्वामर्हन् सुगत इति भक्तियोगात् ये भजन्ते तेभ्योऽभिमतं फलं त्वं ददासीति यत् तद्युक्तम्। तथाहि—इह लोके अध्वक्लान्तैर्जनैः स्वरुचिरचितं किंचिन्नाम गृहीत्वा शीतं जलं पीतं सत् तृप्तिं न करोति किम्। करोत्येव। अत्रार्थान्तरन्यासोऽलङ्कारः॥ ११॥

नियतिकर्तृत्वाभ्यां ईश्वरं साधयति। तत्रादौ नियत्या साधनप्रकारमाह—**आदित्यादी**ति।

आदित्यादिग्रहपरिकरो याति चायाति नित्यं
कालश्चायं दिवसरजनीपक्षमासर्तुचिह्नः।
एतत्सर्वं ननु न घटते प्रेरकत्वं विना ते
कार्ये चास्मिन्न पुनरपरस्यास्ति सामर्थ्यमेतत्॥ १२॥

आदित्यादिग्रहपरिकरः। आदित्यः सूर्य आदिर्येषां ते ग्रहाः तेषां परिकरः समूहः। याति अस्तं याति। आयाति चोदयं याति। नित्यं सर्वदा नियमेनेत्यर्थः। कालश्चायं ग्रहाणामुदयकालोऽस्तमयकालश्च। उदयास्ताभ्यामवच्छिन्नः काल इत्यर्थः। (अ)परिच्छिन्नतामाह—दिवसरजनीपक्षमासर्तुचिह्नः। दिवसः सूर्यतेजसा युक्तः पञ्चदशमुहूर्तावच्छिन्नः [कालः]। रजनी चन्द्रादिग्रहतेजसा युक्तः पञ्चदशमुहूर्तावच्छिन्नः [कालः]। पक्षः पञ्चदशदिनावच्छिन्नः कालः। मासः त्रिंशद्दिनावच्छिन्नः कालः ऋतुर्मासद्वयावच्छिन्नः कालः। एते चिह्नं यस्य सः।

अयमर्थः—निमिषकाष्ठाकलाक्षणमुहूर्तदिवसनिशापक्षमासर्त्वयनसंवत्सरयुगकल्पमहाकल्पादयः सूर्यपरिस्पन्दचन्द्रपरिस्पन्दग्रहपरिस्पन्दनिबन्धनाः सौरचान्द्रनाक्षत्रबार्हस्पत्यादयो माना निशत्या नियमिता इत्यर्थः । एतत्पूर्वोक्तम् । सर्वं समस्तम् । ननु हे परमेश्वर! न घटते न सङ्गच्छते । प्रेरकत्वं नियन्तृत्वं । विना अपहाय । ते तव । कार्यानुमानेन ईश्वरं साधयति—किं च कार्ये कार्यरूपे प्रपञ्चेऽस्मिन् परिदृश्यमाने भूभूधरादिके । न पुनः । पुनरिति वाक्यालङ्कारे । अपरस्य ईश्वरादन्यस्य । अस्ति विद्यते । सामर्थ्यं शक्तिः । एतत् । एतच्च महिम्न:स्तुतौ 'अजन्मानो लोकाः' इति (६) श्लोकव्याख्यानावसरे, अनामयस्तुतौ 'विश्वं प्रादुर्भवति' इति (४) श्लोकव्याख्यानावसरे च निपुणतरमुपपादितम् । तत्तत एवावधार्यम् ।

अत्रेत्थं पदयोजना—हे सदाशिव! नित्यमादित्यादिग्रहपरिकरो याति चायाति च । अयं च कालः दिवसरजनीपक्षमासर्तुचिह्नः । एतत्सर्वं ते प्रेरकत्वं विना न घटते । ननु किं चास्मिन् कार्येऽपरस्य पुनरेतत् सामर्थ्यं नास्ति ॥ १२ ॥

तस्यागारे गिरिश रमते धेनुवत्कामधेनुः
क्रीडावापीविटपिसदृशः कल्पते कल्पवृक्षः
लाक्षारक्षामणिरिव करे तस्य चिन्तामणिः स्या-
द्यस्मिन्सिद्धः सकृदपि कृपादृष्टि[1]यातः प्रसादः ॥ १३ ॥

**तस्यागार** इति । तस्य भक्तस्य । अगारे सदने । गिरिश! रमते क्रीडते । धेनुवत् प्राकृतधेन्वा तुल्यं वर्तते । कामधेनुः सुरगवी । क्रीडावापीविटपिसदृशः । जलक्रीडार्थं निर्मिता वापी क्रीडावापी । तत्रत्यो विटपी वृक्षः । तेन सदृशः । कल्पते प्रभवति । कल्पवृक्षः सुरतरुः । लाक्षारक्षामणिरिव । लाक्षयोपलिप्तो रक्षामणिः शिलाशकलविशेषः । 'इवेन सह नित्यसमासो विभक्त्यलोपश्च' इति (वक्तव्यात्)

[1] ख, घ, च. पातप्रसादः ।

[वार्तिकात्] रक्षामणिरिवेत्येकं पदम् । करे हस्तमूले । तस्य भक्तस्य चिन्तामणिः सुरमणिः स्याद्भवेत् प्राप्नोतीत्यर्थः । यस्मिन्भक्ते सिद्धः संसिद्धः । सकृदपि एकवारमपि । कृपादृष्टियातः कृपादृष्टे-र्यातः प्राप्तः । प्रसादः प्रसन्नता ।

अत्रेत्थं पदयोजना—हे गिरिश! यस्मिन् ते कृपादृष्टियातः प्रसादः सिद्धस्तस्यागारे कामधेनुः धेनुवद्रमते । तस्य क्रीडावापीविटपिसदृशः कल्पवृक्षः कल्पते । तस्य करे चिन्तामणिर्लाक्षारक्षामणिरिव स्यात् ।

अत्रोदात्तालङ्कारः । 'समृद्धिमद्वस्तुवर्णनमुदात्त' इति लक्षणम् । पादत्रये उपमालङ्कारत्रयं संसृष्टम् । संसृष्टेनालङ्कारत्रयेणोदात्तालङ्कारोऽङ्गाङ्गिभावेन सङ्कीर्यते । अत्र स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कार-ध्वनिः । सङ्करालङ्कारेण शिवभक्तो देवेन्द्रतुल्य इत्युपमालङ्कारप्रतीतेः । अत्रेदमालङ्कारिकरहस्यम्—अलङ्कारेणालङ्कारध्वनौ अलङ्कारबीजमात्रमेवा-लङ्कार इति व्यवह्रियते न तु · · नां लङ्कार इति? ॥ १३ ॥

मौलौ लोलत्रिदशतटिनीतोयशीतेऽमृतांशुं
कण्ठे क्रूरं कवलितविषश्यामले व्यालराजम् ।
ज्योत्स्ना[1]गौरे[2] वपुषि विशदं बिभ्रतो भस्मरागं
ज्ञाता सम्यक् त्रिनयन मया [3]योगभूषा [4]तवैव ॥ १४ ॥

**मौलाविति** । मौलौ जटाजूटे । लोलत्रिदशतटिनीतोयशीते । लोलायाः प्रवहन्त्याः त्रिदशतटिन्याः मन्दाकिन्यास्तोयेन जलेन शीते शीतले । अमृतांशुम् शीतांशुं । कण्ठे गले । क्रूरमुग्रम् । कवलित-विषश्यामले कवलितेन भक्षितेन बिषेण श्यामले श्यामलवर्णे । अत्युग्र इत्यर्थः । व्यालराजं सर्पराजम् । ज्योत्स्नागौरे चन्द्रिकावद्धवले । वपुषि शरीरे । विशदं शुभ्रम् । बिभ्रतो दधतः । भस्मरागं भसित-चर्चाम् । ज्ञाता विदिता । सम्यगत्यन्तम् । हे त्रिनयन! मया हलायुधेन । योगभूषा । युज्यत इति योगाः युक्तमित्यर्थः । योगा चासौ भूषा च योगभूषा । तवैव भवत एव ।

---

[1] ख. तोके । [2] क. गौरं ।
[3] ग. योगि । [4] ग. तदैव ।

एतदुक्तं भवति—मन्दाकिनीप्रवाहशीतले शिरसि शीतकिरण एव भूषा युज्यते न तूष्णकिरणः । औष्ण्यस्य शीतवैरित्वात् । कालकूट-विषयुक्ते कण्ठे विषधर एव भूषा युज्यते । नान्यो विषनिवर्तको गारुत्मतादिः । ज्योत्स्नागौरे शरीरेऽत्यन्तं धवलं भसितमेव भूषा युज्यते । नान्यः कस्तूरिकादिर्धावल्यनिवर्तकः । अत उक्तं योगभूषेति । यद्वा—योगभूषा योगवशाद्भूषा योगभूषा । भूषणान्तरमित्यर्थः । तथा हि—शिरसि भूषणं मन्दाकिनी चन्द्ररेखा च । उभयोर्मेलना[द्भूषान्तरम्] । कालकूटधारणं [कण्ठे] भूषणम् । सर्पधारणं बाहुमूलादौ भूषणम् । कण्ठे चोभयोर्मेलनं भूषणान्तरम् । वर्णानां मध्ये शुभ्रवर्ण एव श्रेष्ठः । स च देहस्य भूषणं भस्म । कण्ठे भूषणमेव ! । कण्ठव्यतिरिक्तदेहे उभयोर्मेलनं भषणान्तरमिति । अत उक्तं योगभूषेति । यथारुचि स्वीकार्यम् ।

अत्रेत्थं पदयोजना—हे त्रिनयन ! लोलत्रिदशतटिनीतोयशीते मौलौ अमृतांशुं, कबलितविषश्यामले कण्ठे क्रूरं व्यालराजं, ज्योत्स्नागौरे वपुषि विशदं भस्मरागं, बिभ्रतस्तव योगभूषा मया ज्ञातैव ।

अत्रातिशयोक्तिरलङ्कारः । योगभूषात्वेन धारणासम्बन्धेऽपि सम्बन्धोक्त्या असम्बन्धे सम्बन्धनिबन्धना अतिशयोक्तिः । यद्वा इयं भूषामात्रं न भवति । [किं तु] योगभूषेत्यपह्नवालङ्कारः । यद्वा भूषामात्रमुत योग-भूषेति सन्दिह्य योगभूषैवेति निश्चयान्निश्चयान्तः सन्देहालङ्कारः । एषा-मलङ्काराणामेकवाचकानुप्रवेशेन सङ्कर इत्यलमतिविस्तरेण ॥ १४ ॥

धत्ते शोभां घुसृणतिलकस्पर्धि चक्षुर्ललाटे
मौलौ [1]लग्ना त्रिदशतटिनी मालतीमालिकेव ।
[2]क्ष्वेलं क्रीडामृगमदमयी पत्रलेखेव कण्ठे
श्लाघ्यः शम्भो स्फुरति सहजः कोऽपि भूषाविधिस्ते
॥ १५ ॥

---

[1] घ. लोलत्रिदश ।   [2] घ. क्ष्वेलः ।

**धत्ते शोभा**मिति । धत्ते बिभर्ति । शोभां कान्तिम् । घुसृणतिलकस्पर्धि । घुसृणेन कुङ्कुमेन कृतं तिलकं तेन स्पर्धत इति घुसृणतिलकस्पर्धि । तत्सदृशामित्यर्थः । चक्षुर्नयनम् । घुसृणतिलकस्पर्धिनीं शोभां चक्षुर्धत्त इत्यर्थः । ललाटे निटिले । मौलौ कलापे । लग्ना सक्ता । त्रिदशतटिनी मन्दाकिनी । मालतीमालिकेव मालतीपुष्पस्रगिव । क्ष्वेलं कालकूटम् । क्रीडामृगमदमयी क्रीडायां सम्भोगादौ मृगमदमयी कस्तूरिकाविरचिता । पत्रलेखेव मकरिकापत्रमिव । स्त्रीणामिव पुरुषस्यापि स्त्रीविरचिता मकरिकापत्ररेखा समुचितैवेत्यभिप्रायः । कण्ठे गले । श्लाघ्यः श्लाघनीयः । हे शम्भो! स्फुरति प्रकाशते । सहजः अकृत्रिमः । कोऽपि । किंशब्दः प्रश्ने । भूषाविधिर्भूषाप्रकारः ।

अत्रेत्थं पदयोजना—हे शम्भो! ते ललाटे चक्षुर्घुसृणतिलकस्पर्धि सत् शोभां धत्ते । ते मौलौ लग्ना त्रिदशतटिनी मालतीमालिकेव भाति । ते कण्ठे क्ष्वेलं मृगमदमयी पत्रलेखेव भाति । एष भूषाविधिः सहजः स्फुरति कोऽपि कथयेति शेषः ।

अत्रोत्प्रेक्षालङ्कारः । कोऽपीत्यनेनालौकिकशोभाप्रतीतेः कविप्रौढोक्तिमूलत्वात् तृतीयनयनं घुसृणतिलकत्वेन सम्भाव्यते । क्ष्वेलं मृगमदत्वेन सम्भाव्यते । मन्दाकिनी मालतीमालिकात्वेन सम्भाव्यते । इत्युत्प्रेक्षालङ्कारः । एवं सम्भावितस्यार्थस्य सहजत्वेनाध्यवसानात् अभेदनिबन्धनातिशयोक्तिः । तयोरनुप्राण्यानुप्राणकभावः सम्बन्धः । अत्र कविप्रौढोक्तिनिबन्धनोऽलङ्कारेण वस्तुध्वनिः । तृतीयनयनगङ्गाप्रवाहकालकूटानामाभरणत्वप्रतिपादनरूपोत्प्रेक्षालङ्कारेण महादेवस्य महामहिमरूपाघटमानघटकत्ववस्तुप्रतीतेः ॥ १५ ॥

दग्धं येन त्रिभुवनमिदं देव दुर्वारधाम्ना
दग्धः सोऽपि त्रिनयन भवद्दृष्टिपातेन कामः ।
युक्तं चैतद्भवति पुरुषो यः परस्योपतापी
तस्यावश्यं पतति शिरसि क्रोधदण्डः प्रभूणाम् ॥ १६ ॥

**दग्धं येन** इति । दग्धं नाशितम् । वर्णाश्रमव्यतिकरं कृत्वेत्यर्थः । येन मन्मथेन । त्रिभुवनमिदम् । हे देव । दुर्वारधाम्ना दुर्वारं धाम प्रतापो यस्य तेन । 'नमोऽस्त्वहार्यवीर्याय तस्मै कुसुमधन्वने' इति महाकविभिरुक्तम् । दग्धो भस्मितः । सोऽपि । अपिशब्दोऽसाध्यत्वं द्योतयति । हे त्रिणयन । भवद्दृष्टिपातेन निटिलाक्षिपातेन । कामो मन्मथः । युक्तं चैतत् । कामो दग्ध इति यत्तद्युक्तं भवति । पुरुषो यः परस्योपतापी परपीडारतः । तस्य परोपतापिनः अवश्यं ध्रुवम् । पतति । शिरसि मूर्धनि । क्रोधदण्डः क्रोधमूलको दण्डः शिक्षणम् । प्रभूणामीश्वराणाम् ।

अत्रेत्थं पदयोजना—हे देव! त्रिणयन! दुर्वारधाम्ना येनेदं त्रिभुवनं दग्धं सोऽपि कामो भवद्दृष्टिपातेन दग्धः । एतच्च युक्तम् । यः पुरुषः परस्योपतापी भवति तस्य शिरसि प्रभूणां क्रोधदण्डोऽवश्यं पतति ।

अत्रार्थान्तरन्यासोऽलङ्कारः । अनेनालङ्कारेण कैमुत्यन्यायनिबन्धनोऽर्थापत्त्यलङ्कारो व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः । तथाहि—प्रभूणां क्रोधदण्डः परोपतापिशिरसि पततीत्यनेन प्रभूणामपि प्रभोस्तव किमुतेति प्रतीतेः ॥ १६ ॥

कस्य क्षेमो भवति बलिना स्पर्धमानस्य सार्धं
यस्त्वत्कोपात्त्रि[1]नयन! भवच्चक्षुषा वञ्चितोऽभूत् ।
प्रेम्णा दष्टेऽधरकिसलयेऽदृष्टवान् ([2]यस्य) [[3]यः स गामी]
लीलानृत्यच्चतुरवनिताभ्रूलता[4]प्रेक्षणानि ॥ १७ ॥

**कस्य** इति । कस्य जनस्य । क्षेमः कुशलम् । भवति विद्यते । बलिना बलवता । स्पर्धमानस्य कलहायमानस्य । सार्धं सह । यः काम इत्यर्थः । त्वत्कोपात् क्रोधात् । हे त्रिनयन! भवच्चक्षुषा भवतश्चक्षुषा तृतीयनयनेन । वञ्चितोऽपवाहितः । संहृत इति यावत् । अभूत् । प्रेम्णा अनुरागेण । दष्टे संदष्टे । अधरकिसलये अधरपल्लवे । अधरः किसलय

---

[1] क. त्रिणयन । [2] अ, ख, ग. यस्य गामी । घ, च. यस्य कामी ।
[3] क, ङ. पाठोऽयम् । [4] ग. वेक्षणानि ।

इव । अदृष्टवान् अदृष्टं भाग्यमस्तीत्यदृष्टवान् । दृष्टं दर्शनं । भावे निष्ठा । अदृष्टमदर्शनमस्यास्तीति अदृष्टवाननङ्ग इति यावत् यो मन्मथः । स गामी । गच्छतीति गामी । लीलानृत्यच्चतुरवनिताभ्रूलताप्रेक्षणानि । लीलया क्रीडया नृत्यन्तश्चतुरवनितानां प्रौढकान्तानां भ्रूलतास्ताभिर्युक्तानि प्रेक्षणानि । अत्र द्वितीया विभक्तिः । गामिपदयोगात् "ग(मिका)-म्यादीनामुपसंख्यानम्" इति वक्तव्यबलात् ।

अत्रेत्थं पदयोजना—बलिना साध स्पर्धमानस्य कस्य क्षेमो भवति । हे त्रिनयन! त्वत्कोपाद्यो मन्मथो भवच्चक्षुषा वञ्चितोऽभूत् । प्रेम्णा दष्टेऽधरकिसलये लीलानृत्यच्चतुरवनिताभ्रूलताप्रेक्षणानि यो गामी सोऽदृष्टवानिति विद्म इति शेषः ।

अत्र पूर्वार्धे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । उत्तरार्धे श्लेषालङ्कारः । अनयोः संसृष्टिः । अत्रालङ्कारेण वस्तुध्वनिः । तृतीयनयनतिरस्कारात् कान्ताकटाक्षशरणागतिरूपवस्तुध्वननात् । अनेन ध्वनिना काव्यलिङ्गध्वनिरुपमानध्वनिश्च । नयनतिरस्कृतस्य नयनान्तरमेव सेव्यम् । यथा राजतिरस्कृतस्य राजान्तरम् विद्वत्तिरस्कृतस्य विद्वदन्तरमित्यादि । एवमनयोरेकव्यञ्जकानुप्रवेशेन सङ्कर इत्यलमतिविस्तरेण ॥ १७ ॥

ये दारिद्र्योपहतवपुषो ये च दौर्भाग्य[1]दग्धा
ये वा शत्रुव्यसनविकला ये च मौर्ख्योपतप्ताः ।
ये वा कैश्चि[2]त्त्रिनयन दृढं [3] पीडिता दुःखशोकै-
स्तेषामेकस्त्वमसि शरणं तर्षितानामिवाम्भः ॥ १८ ॥

**ये दारिद्र्योपहतवपुष** इति । ये जनाः । दारिद्र्योपहतवपुषः । दारिद्र्येण दौर्गत्येनोपहतानि जीर्णानि वपूंषि येषां ते । ये च जना दौर्भाग्यतप्ताः [दग्धाः] । दौर्भाग्येणापकर्त्रा तप्ताः [दग्धाः] पीडिता इत्यर्थः । ये जनाः । शत्रुव्यसनविकलाः । शत्रुभिर्व्यसनं दुःखं

[1] घ, ङ. तप्ता । [2] क. त्रिणयन ।
[3] ग. दुःखिता ।

तेन विकला विगतौजसः । ये च जनाः मौर्ख्योपतप्ताः । मौर्ख्येणाज्ञानेनोपतप्ताः । जडा इत्यर्थः । ये वा जनाः । कैश्चित् । हे त्रिनयन ! दृढमत्यन्तम् । दुःखशोकैः । दुःखेन त्रिविधेन जाताः शोका आधयस्तैः । तेषां जनानाम् । एकस्त्वमेव नान्यः । आसे । शरणं रक्षिता । 'शरणं गृहरक्षित्रोः' इत्यमरः । तर्षितानां पिपासूनाम् । इव । अम्भः जलम् ।

अत्रेत्थं पदयोजना—हे त्रिनयन ! ये दारिद्र्योपहतवपुषो ये च दौर्भाग्यतप्ता[दग्धा] ये वा शत्रुव्यसनविकला ये च मौर्ख्योपतप्ता ये वा कैश्चिद्दुःखशोकैर्दृढं पीडितास्तेषां तर्षितानामम्भ इव त्वं [एकः] शरणमसि ।

अत्रोपमालङ्कारो व्यतिरेकालङ्कारश्च । तर्षितानामम्भ एव शरणं नान्यच्छाकाहारादिकम् । एवं दरिद्रादीनां भवानेव शरणं नान्यद्देवतान्तरमिति(व्यतिरेकः)[उपमा] । अत्रालङ्कारेण वस्तुध्वनिः । व्यतिरेकेण परमेश्वरस्य सर्वदेवना[रूपत्व]रूपवस्तुध्वननात् । तथाहि—दारिद्र्यादिदोषाणां मध्ये एकैकस्यैव दोषस्य निवर्तकत्वमेकैकस्यैव देवस्य । यथा—दारिद्र्यदोषनिवर्तकत्वं हुताशनस्यैव । व्याधिदोषनिवर्तकत्वं भास्करस्यैव । 'आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात्' इत्यादिस्मृतिभ्यः । सदाशिवस्य [तु] दारिद्र्यादिसकलदोषनिवर्तकत्व(रूपवस्तुनो)[मिति] (ध्वननात्) व्यतिरेकः ॥ १८ ॥

श्लाघ्यं जन्म श्रुतिपरिणतिः सत्क्रियायां प्रवृत्तिः
प्रौढिः शास्त्रे ललितमधुरा संस्कृता भारती च ।
स्फीता लक्ष्मीर्विपुरतिहदं चन्द्ररेखाङ्कमौले
युष्मत्सेवापदविरहितं सर्वमेतत्पलालम् ॥ १९ ॥

श्लाघ्यमिति । श्लाघ्यं श्लाघनीयम् । जन्म ब्राह्मणजन्मेत्यर्थः । श्रुतिपरिणतिः । श्रुतिषु वेदेषु परिणतिरत्यन्तोऽभ्यासः । सत्क्रियायां यज्ञादिकर्मणि प्रवृत्तिरनुष्ठानम् । प्रौढिः प्रौढता । [शास्त्रे] मीमांसायाम् । ललितमधुरा । ललिता चासौ मधुरा चेति विग्रहः ।

शीतोष्णवत्समासः । ललितपदेन गुणालङ्कारानुग्रहमाह । मधुरपदेन रसौचित्यमाह । संस्कृता व्याकरणेन शिक्षिता । भारती च वाणी च । स्फीता प्रभूता । लक्ष्मीः सम्पत् । वपुः शरीरम् । अतिदृढं नीरोगम् । हे चन्द्ररेखाङ्कमौले! युष्मत्सेवापदविरहितं । युष्माकं सेवा युष्मत्सेवा । युष्मत्पदं पूजायाम् । सेवायाः पदं स्थानमुद्योगो वा । तेन विरहितम् । सर्वमेतत् । पलालं बुसं निष्फलमित्यर्थः । यथान्वयमेतत् ।

अत्र वस्तुना वस्तुध्वनिः । 'सर्वमेतत्पलालं' इति वस्तुना ईश्वर भक्तिं विना यद्यत्कृतं तत्सर्वं विगुणं भवतीति वस्तुध्वनेः ॥ १९ ॥

[1]त्वत्पूजायां कुसुमहरणे[2]धावतः पादयुग्मं
यत्पाषाण[3]व्रजपरिकरोद्गीर्णरेखाङ्कमासीत् ।
तत्त[4]स्यैवं तदनुचरतो रुद्रलोकं गतस्य
ब्रह्मादीनां [5]मुकुटकिरणश्रेणयः शोणयन्ति ॥ २० ॥

**त्वत्पूजायामिति** । त्वत्पूजायां तव पूजायामित्यर्थः । कुसुमहरणे कुसुमशब्दः पूजासाधनोपलक्षणार्थः । धावतः पूजापारवश्याच्छीघ्रं गच्छतः । पादयुग्मं चरणयुग्मम् । यत् पाषाणव्रजपरिकरोद्गीर्णरेखाङ्कम् । पाषाणानां व्रजः समूहस्तत्र परिकरः शिल्पपाषाणसमूहस्तेनोद्गीर्णा घर्षणेन प्रकाशिता रेखास्ता एवाङ्कश्चिह्नं यस्य तत् । आसीत् । तत्पदम् । तस्य भक्तस्यैवं एवं प्रकारेणावस्थितं । रेखाङ्कमित्यर्थः । तदनु [तस्य] देहत्यागानन्तरं । चरतो रुद्रलोकं कैलासं गतस्य । ब्रह्मादीनां देवानां मुकुटकिरणश्रेणयः किरीटमाणिक्यकिरणपङ्क्तयः । शोणयन्ति शोणवत्कुर्वन्ति । 'तत्करोति तदाचष्टे' इति णिच् । 'विण्मतोर्लुक्' इति लुक् । यद्वा शोणं कुर्वन्तीति शोणयन्ति । 'गुणवचना मतुबर्था' इत्याह कैयटः ।

[1] ग. यत्पूजायां । [2] ग. नापतत् ।
[3] घ. व्रजपरिकरोत्तीर्णरक्ताक्तमासीत् ।
च. व्रणपरिकरोत्कीर्णरक्तान्तमासीत् ॥
[4] ग. स्यैव त्वदनुभवतां । [5] ख. ग, घ, ङ, च, मकुट ।

**अत्रेत्थं** पदयोजना—हे हर! त्वत्पूजायां कुसुमहरणे धावतो यस्य यत्पादयुग्मं पाषाणव्रजपरिकरोद्दीर्णैरेखाङ्कमासीदेवं तत्पदं तदनु रुद्रलोकं गतस्य चरतस्तस्य ब्रह्मादीनां मुकुटकिरणश्रेणयः शोणयन्ति ।

अत्र वस्तुना वस्तुध्वनिः । शिवपूजानिरतो भक्तः ब्रह्मादीनामपि नमस्कार्य इति वस्तुध्वननात् ॥ २० ॥

येषां युष्मत्प्रतिकृतिगृहं लिम्पतां [1]पाणयो ये
त्वद्भक्तानां सलिल[2]लुलितैर्गोमयैः सम्प्रलिप्ताः ।
तेषामीश त्रिदशनगरीनायकत्वं गतानां
ते लिप्यन्ते मृगमदरसैः [3]खेचरीणां कुचेषु ॥ २१ ॥

**येषामिति** । येषां भक्तानाम् । युष्मत्प्रतिकृतिगृहं शिवालयवीरभद्रालयादिकम् । लिम्पतामुपलिम्पताम् । पाणयो हस्ताः । ये । त्वद्भक्तानां त्वत्सेवकानाम् । सलिललुलितैर्जलमिलितैः । गोमयैर्गोपुरीषैः । सम्प्रलिप्ताः । तेषां भक्तानाम् । हे ईश! त्रिदशनगरीनायकत्वं स्वर्गाधिपत्यम् । गतानां प्राप्तानाम् । ते हस्ताः । लिप्यन्तेऽनुलिप्यन्ते । मृगमदरसैः कस्तूरिकाद्रवैः खेचरीणां खेचराङ्गनानाम् । कुचेषु स्तनेषु स्थितैः ।

अत्रेत्थं पदयोजना—हे ईश! युष्मत्प्रतिकृतिगृहं लिम्पतां येषां ये पाणयः सलिललुलितैर्गोमयैः सम्प्रलिप्ताः, त्रिदशनगरीनायकत्वं गतानां तेषां त्वद्भक्तानां ते खेचरीणां कुचेषु मृगमदरसैर्लिप्यन्ते ।

अत्र वस्तुना वस्तुध्वनिः । ईश्वरपूजाव्यतिरेकेण स्वर्गसाधनं किमपि नास्तीति वस्तुनो ध्वननात् ॥ २१ ॥

[4]यस्ते कृत्वा स्नपनममृतैः पञ्चभिश्चन्द्रमौले
[5]पश्चात्कैश्चित्कुसुमनिकरैर्मूर्ध्नि बध्नाति मालाम् ।
तस्यावश्यं सकलभुवनैकाधिपत्याभिषिक्ते
बध्नन्त्यन्ये शिरसि परमैश्वर्यसाम्राज्यपट्टम् ॥ २२ ॥

---

[1] ग. प्राङ्गणे यः ।
[2] ग. लुलिते गोमये ।
[3] ग. किन्नरीणां ।
[4] च. पुस्तकेऽयं २३ श्लोकः ।
[5] ग. कैश्चित्पूजाकुसुमनिकरै ।

**यस्त** इति। यो भक्तः। ते तव। कृत्वा। स्नपनमभिषेकम्। अमृतैः पञ्चभिर्दधिक्षीराज्यक्षौद्रेक्षुरसैरित्यर्थः। हे चन्द्रमौले! पश्चात्स्नपनात्। कैश्चित्करवीरादिभिः। कुसुमनिकरैः पुष्पसमूहैः। मूर्ध्नि मस्तके। बध्नाति। मालां स्रजम्। तस्य भक्तस्य। अवश्यं नित्यम्। सकलभुवनैकाधिपत्याभिषिक्ते त्रिभुवनसाम्राज्ये। बध्नन्ति। अन्ये त्वदन्ये ब्रह्मादयः। शिरसि मूर्धनि। परमैश्वर्यसाम्राज्यपट्टं परमैश्वर्यसाम्राज्य चिह्नरूपं पट्टं स्वर्णपट्टिकाम्।

अत्रेत्थं पदयोजना—हे चन्द्रमौले! यो भक्तस्ते शिरसि पञ्चभिरमृतैः स्नपनं कृत्वा पश्चात्कैश्चित्कुसुमनिकरैः रचितां मालां मूर्ध्नि बध्नाति। अन्ये तस्य सकलभुवनैकाधिपत्याभिषिक्ते शिरसि परमैश्वर्यसाम्राज्यपट्टं बध्नन्ति॥

अत्र न्यूनाधिकविनिमयनिबन्धनः परिवृत्तिरलङ्कारः। न्यूनाधिकाभ्यां न्यूनाधिकयोर्विनिमयः परिवृत्तिः। अयमर्थः—न्यूनाधिकयोर्विनिमयः अधिकन्यूनयोर्विनिमय इति न्यूनमादायाधिकप्रदानम्, अधिकमादाय न्यूनप्रदानम्, न्यूनं दत्वा अधिकादानम्, अधिकं दत्वा न्यूनादानमिति चतुर्विधोऽयं परिवृत्यलङ्कारः। अत्र न्यूनं पञ्चामृतकुसुमादिकं दत्वाधिकं त्रैलोक्याधिपत्यमादत्तमिति न्यूनेनाधिकपरिवृत्तिः। पर्यायमिति लक्षणम्।

अयमर्थः—समयोर्विषमयोरिति चतुर्विधोऽयमलङ्कारः। अत्र समपर्यायः। आदौ परमेश्वरशिरसि प्रवर्तमाना पञ्चामृतस्नपनपुष्पमालारचनात्मिका पश्चात्पर्यायेण स्वशिरसि अभिषेकजलसुवर्णपट्टात्मिका भवत्येकरूपामृतमाल्ययोः समयोरेव पर्याय इति द्वयम्। यद्वा—अतिशयोक्तिरलङ्कारः। पञ्चामृतस्नपनमाल्याभिषेकपट्टबन्धानां भेदे सत्यभेदकथनात् [भेदेऽपि] अभेदनिबन्धना अतिशयोक्तिः। त्रयाणामलङ्काराणामेकस्य प्राधान्येऽपरस्य गुणभावे विनिगमकप्रमाणाभावात्सन्देहसङ्करः॥ २२॥

[1]एतच्चित्रं क्वचिदपि मया नैव दृष्टं श्रुतं वा
तद्विस्पष्टं कथय किमिदं नाथ कौतूहलं मे ।
यत्ते भक्त्या [2]हर चरणयोरर्पितं पुष्पमेकं
सद्यस्सूते फलमभिमतं कोटिशः कामरूपम् ॥ २३ ॥

**एतच्चित्र**मिति । एतद्वक्ष्यमाणं चित्रमद्भुतम् । क्वचिदपि देशे काले च । मया हलायुधेन । नैव दृष्टं श्रुतं वा । तदद्भुतकरं वस्तु । विस्पष्टं निःसन्देहं कथय वद । अद्भुतं वस्तु पृच्छति—किमिदमिति । हे नाथ! कौतूहलम् । मे मम । यत् पुष्पम् । ते तव । भक्त्या । हे हर! चरणयोः पादयोरर्पितं पूजितम् । पुष्पं कुसुममेकम् । सद्यस्तदानीम् । सूते जनयति । फलमभिमतमभीष्टम् । कोटिशः कोटिसंख्याकम् । कामरूपं मनोरथाभ्यस्तम् ।

अत्राभिमतपदेन साध्यप्राप्तिरुक्ता । कामरूपपदेन साध्यानामनन्तानां मनोरथविजृम्भितानामसाध्यानामपि प्राप्तिरुक्ता । यद्यपि कामरूपपदेनैवाभिमतप्राप्तिरुक्तैव । तथापि अभिमतप्राप्तिः स्वतःसिद्धा । मनोरथप्राप्तिस्तु साध्येति नानयोः पौनरुक्त्यम् ।

अत्रेत्थं पदयोजना—हे नाथ! एतच्चित्रम् क्वचिदपि मया नैव दृष्टं श्रुतं वा । तद्विस्पष्टं कथय । किमिदं? कौतूहलं मे । हे हर! यदेकं पुष्पं भक्त्या ते चरणयोरर्पितं सद्यः कामरूपमभिमतं फलं सूते ।

अत्र विरोधोऽलङ्कारः । वृन्ताच्च्युतस्य पुष्पस्य फलजनकत्वं विरोधः । ईश्वरपादार्पणमहिम्ना विरोधपरिहारः । अत एव विरोधस्याभासत्वम् । 'विरोधाभासो विरोध' इति लक्षणम् । एकं पुष्पमनेकं फलं जनयतीति विरोधः । सद्य एव फलं जनयतीति विरोधः । पुष्पानुरूपं फलं विहाय वाञ्छानुरूपेण फलतीति विरोधः मनोरथानुसारेण फलतीति विरोधः । तत्रापि कोटिश इति विरोधः । विरोधस्याभासत्वमुक्तं प्राक् ।

---

[1] च. पुस्तकेऽयं २२ श्लोकः । [2] ग. कर ।

